एतदापस्तम्बेन स्पष्टीकृतम्—" मुखतोऽभिघ्नन्ति हन्तारं हन्तारमभिपर्यावर्तते " इति ॥

ताड्यमानं प्रदेशं विधत्ते—

"शीर्षतो घ्नन्ति । शीर्षतो ह्यन्नमद्यते।" [ब्रा०का०१प्र०३ अ०७] इति ॥

चतुर्दिक्षु हननं विधत्ते—

"दिग्भ्यो घ्नन्ति । दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते ।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

## अमृतमसि पुष्टिरसि प्रजननमसि—

कल्पः—" अत्रास्मै प्रत्यवरोहत आसन्दीं निदधाति तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानꣳ हिरण्यं दक्षिणं पादꣳ हिरण्य उपावरोहयति अमृतमसीति, पुष्टिरसि प्रजननमसीति सव्यं बस्ताजिने " इति ।

हे हिरण्य त्वं विनाशरहितमसि । नह्यग्नौ प्रक्षिप्तमपि हिरण्यं काष्ठादिवद्विनश्यति । हे बस्ताजिन त्वं पुष्टिरसि संवत्सरे बह्वपत्योत्पादकत्वात् । एतदेवाभिप्रेत्य प्रजननमसीत्युच्यते ॥

हिरण्येऽवरोहं विधातुं प्रस्तौति—

" ईश्वरो वा एष पराङ्प्रदघः । यो यूपꣳ रोहति । " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

यूपमारूढो यजमानः पराङ्भूलोकाद्विमुखः प्रदघः प्रदग्धुं स्वात्मानं विनाशयितुमीश्वरः समर्थो भवति । अथ वा प्रदघः प्रकर्षेण गन्तुमीश्वरो न पुनरावर्तत इत्यर्थः ॥

विधत्ते—

" हिरण्यमध्यवरोहति । अमृतं वै हिरण्यम् । अमृतꣳ सुवर्गो लोकः । अमृत एव सुवर्गे लोके प्रतितिष्ठति ।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

हिरण्यस्य परिमाणं विधत्ते—

" शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

मानशब्देन पणस्य विंशो भागोऽभिधीयते । ततः पञ्चपणपरिमितमित्युक्तं भवति । शतसंख्याकाः संवत्सराः पुरुषस्याऽऽयुः । दशानां ज्ञानकर्मेन्द्रि-

यार्णा मध्ये चक्षुरादीन्द्रियस्यैकैकस्य दशसु नाडीषु वृत्तिभेदेन शतेन्द्रियत्वम् ॥

बस्ताजिने वामपादप्रक्षेपं विधातुं प्रस्तौति—

" पुष्ट्यै वा एतद्रूपम् । यदजा । त्रिः संवत्सरस्यान्यान्पशून्परिप्रजायते।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

संवत्सरे सकृत्प्रसवोपेतानन्यान्गवादिपशून्परित्यज्य संवत्सरे त्रिरपत्यानि प्रसूतेऽतोऽस्याः पुष्टिरूपत्वम् ॥

विधत्ते—

" बस्ताजिनमध्यवरोहति । पुष्ट्यामेव प्रजनने प्रतितिष्ठति (७)।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

अत्र विनियोगसंग्रहः—

" क्षत्र तार्प्यं क्षत्र दार्भ्यं परिधत्तोऽत्र दंपती ।
जाये स्वाम्याह्वयेद्भार्या रोहा तं प्रतिवक्ति सा ॥ १ ॥
अहं स्वाम्याह वाजश्च जुहुयाद्द्वादशाऽऽहुतीः ।
आयुर्दशभिरारोहेत्स्वयं बाहू द्रुहः सुवः ॥ २ ॥
सं भुवं प्रेक्षतेऽन्नाय चतुर्भिस्तु महर्त्विजः ।
दिग्भ्यो ग्रन्त्यासपुटकैरमृपुष्टिद्वयात्पदे ॥
स्वर्णबस्तत्वचोर्दद्यात्पञ्चत्रिंशच्चिहोदिताः ॥ ३ ॥ " इति ॥

अथ मीमांसा ।

दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

" तार्प्यमहतवस्त्रस्य बाधकं स्यान्न वाऽग्रिमः ।
गुह्याच्छादनकार्यैक्यादयोग्यत्वात्समुच्चयः ॥ "

महाव्रते श्रूयते—" तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी " इति । प्रकृतौ " अहतं वासः परिधत्ते " इति घृताक्तं वस्त्रं तार्प्यमित्युच्यते । ताभ्यां तार्प्यदर्भमयाभ्यां दंपत्योरहतं वस्त्रं बाध्यते । कुतः । परिधत्त इत्यनेन प्रकृतिलिङ्गेन गुह्याच्छादनलक्षणस्य कार्यस्यैकत्वावगमात् । मैवम् । तार्प्यदर्भमययोर्गुह्यमाच्छादयितुमयोग्यत्वात् । परिधानं त्वत्रोपरितनं प्रावरणम् । तत्कार्यभेदात्समुच्चयः ।

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

" भवेत्सप्तदशारत्निर्वाजपेयस्य यूपकः ।
उन्मानं द्रव्यगं वाजपेयस्याङ्गं पशोरुत ॥

(वाजपेयविषययूपारोहणाभिधानम्)

आनन्तर्यात्प्रकरणात्कर्माङ्गं षोडशिन्यदः ।
ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।
सौमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना ॥"

वाजपेयप्रकरणे श्रूयते—"सप्तदशारत्निर्वाजपेयस्य यूपो भवति" इति । अत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गं, सप्तदशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात् । प्रकरणं चैवमनुगृह्यते । यदि कर्मणः साक्षादूर्ध्वमानं न संभवेत्तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं संबध्य तद्द्वारा कर्मणाऽन्वेतीति प्राप्ते ब्रूमः—सप्तदशारत्निर्यूप इति सामानाधिकरण्याद्यूपेन साक्षात्संबध्यते । तस्य च यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति । तस्यापि पशोर्वाजपेयाङ्गत्वात्पशुद्वारा कर्मणोऽङ्गम् । यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबन्धाभावात्पशुव्यवधानमभ्युपेयम् । वाजपेयस्येति षष्ठ्याः संबन्धमात्रवाचित्वेन व्यवहितसंबन्धमप्यसावभिधत्ते, देवदत्तस्य नप्तेति प्रयोगवत् । यत्सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यं यच्च प्रकरणं तदुभयं न विरुद्धं, पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात् । किं च पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम् । सिद्धान्ते तु नासौ दोषः ॥

तत्रैवाष्टमपादे चिन्तितम्—

"वाचयेत्स्वामिनं ज्ञाज्ञौ वाचनीयो ज्ञ एव वा ।
अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुम् ॥"

वाजपेये श्रूयते—"क्लृप्तीर्यजमानं वाचयति" इति । आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः क्लृप्तयः । तत्र मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत्, विद्वांसं वाचयेदित्येवं विशेषस्याश्रवणात्, अनभिज्ञं तदैव शिक्षयित्वाऽपि वाचयितुं शक्यत्वादिति चेन्मैवम् । अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात् । तस्मादभिज्ञमेव वाचयेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

१ क. घ. ङ. च. 'भयमवि' ।